न वक्तुं शक्यम् । विधिवैयर्थ्यप्रवृत्त्यनुपपत्तिप्रसङ्गाभ्याम् । तत्सापेक्षत्वे तदेवास्तु, कृतं तत्सापेक्षेण तेन । नचाचेतनं चेतनाधिष्ठितमेव कार्यक्षममिति केवलेन तेन न फलं सम्भवतीति वाच्यम् । कर्मस्वरूपं स्वर्गादिकं च न लोकसिद्धम्, किन्तु श्रुतिसिद्धम् । तत्र च स्वर्गादिफलसाधकत्वेनैवोत्पत्तिवाक्येष्वर्थवादेषु च 'अग्निष्टोमेन स्वर्गकामो यजेत' 'अग्निहोत्रं जुहोति प्रजाकाम' इत्यादि । 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' 'परमेष्ठिनो वा एष यज्ञोऽग्र आसीत्, तेन स परमां काष्ठामगच्छ'दित्यादिषु कर्म श्रूयते । स च तत्साध्यत्वेनैव । एवं सति लोकेऽन्यथा दर्शनेपि धर्मिग्राहकप्रमाणेन तथैव सिद्धत्वान्नात्र काचन शङ्का । ईश्वरवादिनो नित्यज्ञानादिमत्त्व इव । आमुष्मिकफलत्वेन तत् प्रतिबन्धकापगमे भवतीत्यावयोस्तुल्यम् । तस्याशुतरविनाशित्वेपि श्रुतिसिद्धकारणतानिर्वाहाय तद्व्यापारोऽपूर्वं कल्प्यते । अविषमादीश्वरात् विषमफलोत्पत्त्यनुत्पत्तिर्वैषम्यनैर्घृण्ये च स्याताम् । अतः कर्मण एव फलमिति जैमिनिर्मनुते ॥ ४० ॥

भाष्यप्रकाशः ।

उपपत्तिश्रवणाभ्यामेव हेतुभ्यां धर्मं फलकारणं जैमिनिराचार्यो मन्यत इति सूत्रयोजना । तदेतत्तौल्यं व्युत्पादयन्ति तथा हीत्यादि । प्रवृत्तीति । विध्यर्थज्ञानोत्तरप्रवृत्तेरनुपपत्तिप्रसङ्गो दूषणान्तरमित्यर्थः । इत्यादीति, कामनावतः कर्माधिकारश्रावणात् स्वर्गकामादिपदैः कर्मफलं श्रूयत इत्यर्थः । स चेति । फलरूपः स्वर्गादिः । अन्यथा दर्शनेपीति । राजादिभ्यः फलप्राप्तिदर्शनेऽपि । अत्रेति । वेदबोधिते कर्मणि तत्फले च । नित्यज्ञानादिमत्त्व इवेति । धर्मिग्राहकेत्यादिकमत्रापि सम्बध्यते । ननु यदि कर्मणैव फलम्, तदा तदव्यवहितोत्तरं कुतो न जायत इत्यत आह आमुष्मिकेत्यादि । तदिति । स्वर्गादिरूपं फलम् । दूषणान्तरमाशङ्क्य परिहरति तस्याश्वित्यादि । तर्हि तौल्यादेकतरस्य फलहेतुत्वनिश्चयः, उभयोः समुच्चयो वेत्याकाङ्क्षायां स्वमतोपष्टम्भायाह अविषमादित्यादि ॥ ४० ॥

रश्मिः ।

तदुत्तरं प्रवृत्तिः तस्या अनुपपत्तिस्तस्याः प्रसङ्गः । भाष्ये । तदिति । कर्म । तेनेति । ईश्वरेण । एवेति । दर्शनादेवकारः । तेनेति । कर्मणा । एवेति । ननु तन्निरपेक्षेण कर्म श्रूयत इत्यग्रेऽन्वयः । उत्पत्तीति । प्रथमज्ञप्तिरुत्पत्तिः । साध्यसाधनत्वेन प्रथमज्ञप्तिः । तद्बोधकवाक्येषु । अर्थवादेष्विति । जैमिनिमतत्वादर्थवादपदम् । 'अन्यथा हीतिवाक्ये चतुरक्षरे द्वे पुण्यस्य पापस्य निदानभूते । उच्चारणादेव नृणां मुनीन्द्रा नारायणश्चेत्यर्थवादः' इत्यस्य विरोधः स्यात् । फलसम्बन्धाभावादर्थवादत्वमित्याशयेनाहुः अग्निहोत्रमिति । प्रकृते । इत्यादीति । कर्मफलमिति । तेनोत्पत्तिवाक्यत्वमर्थवादत्वं चेति भावः । एष यज्ञ इति । अग्निष्टोम इत्यर्थः । 'परमेष्ठिनो वा एष यज्ञोऽग्र आसीद्यदग्निष्टोम' इतिश्रुतेः । राजेति । राजादिभ्यश्चेतनेभ्यः फलं ग्रामधनादि । भाष्ये । तथैवेति । चेतननिरपेक्षसाधनत्वस्यैव । 'कर्मैके तत्र दर्शना'दिति जैमिनिसूत्रादेवकारः । प्रतिबन्धकेति । शरीराद्यपगमे । परीति । जैमिनिः परिहरति । तस्याश्वित्यादीति । श्रुतिसिद्धेति । व्यापारवदसाधारणं कारणमित्यर्थः । तस्य भावः कारणता । आहेति । जैमिनिराह । अविषमादीत्यादि । अवीति । सप्तमस्कन्धे 'समः प्रियः सुहृ'दिति वाक्यात् । कर्मण एवेति । जडात्, नतु चेतनादीश्वरात् ॥ ४० ॥

पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ ४१ ॥

तुशब्दः पूर्वपक्षव्युदासार्थः। बादरायणस्त्वाचार्य इतः पूर्वोक्तमीश्वरमेव फलदत्वेन मनुते। कुतः। हेतुव्यपदेशात्। हेतुत्वेन श्रुतौ व्यपदेशादित्यर्थः। 'एष उ एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते, एष उ एवासाधु कर्म कारयति यमधो निनीषत' इति श्रुतौ न केवलं कर्मकारयितृत्वमुच्यते, अपि तु फलदित्सया तथा तथात्वम्। अतः फलदत्वमीश्वरस्यैव व्यपदिष्टं भवतीति नानुपपत्तिः काचित्। नन्वीश्वरस्य स्वतः फलदाने समर्थस्य फलदित्सायां सत्यां कर्मकारणे को हेतुः, कार्यवैचित्र्यं च कथमित्यादिचोद्यं 'कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्य' इत्यत्र निरस्तम्। विद्वन्मण्डने श्रीविट्ठलेन च। अतः सकामैरपि स एव भजनीयः, नान्य इति सिद्धम् ॥ ४१ ॥

इति तृतीयाध्याये द्वितीयपादे एकादशं फलमत इत्यधिकरणम् ॥ ११ ॥

इति श्रीवेदव्यासमतवर्तिश्रीवल्लभाचार्यविरचिते श्रीमद्ब्रह्मसूत्राणुभाष्ये तृतीयाध्यायस्य द्वितीयः पादः ॥ ३ ॥ २ ॥

---

भाष्यप्रकाशः।

पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥४१॥ दूषणमाशङ्क्य तत्परिहारः प्रागेवोक्त इति स्मारयन्ति नन्वित्यादि ॥ ४१ ॥ इत्येकादशं फलमत इत्यधिकरणम् ॥ ११ ॥

इति श्रीमद्वल्लभाचार्यचरणनखचन्द्रनिरस्तहृदयध्वान्तस्य पुरुषोत्तमस्य कृतौ भाष्यप्रकाशे तृतीयाध्यायस्य द्वितीयः पादः ॥ ३ ॥ २ ॥

रश्मिः।

पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ ४१ ॥ भाष्ये। पूर्वपक्षेति। प्रकाशोक्तरीत्या व्याख्यानम्। अनीश्वरजैमिनिमते पूर्वपक्षेत्यर्थः। ईश्वरमेवेति। ननु कर्म। उन्निनीषत इति। अन्यत्रोन्निनीषतीति परस्मैपदी। ईश्वरस्यैवेति। ननु कर्मणः। काचिदिति। प्रथमशास्त्रत्वेपि व्यासस्य गुरुत्वात्स्वपक्षीकरणेपि न काचिदनुपपत्तिः। प्रागेवेति। कृतप्रयत्नापेक्षसूत्रे। विद्वन्मण्डने चेति योगित्वम्। 'अनागतमतीतं चे'ति वाक्यात्। भाष्ये। अतः सकामैरिति। आदिसमध्यमाधिकारिभिरपि। अपिनोत्तमाधिकारी। स विरुद्धधर्माश्रयः। मीमांसितत्वादेवकारः ॥ ४१ ॥ इत्येकादशं फलमत इत्यधिकरणम् ॥ ११ ॥

इति श्रीविट्ठलेश्वरैश्वर्यनिरस्तसमस्तान्तरायेण श्रीगोविन्दरायजित्पौत्रेण संपूर्णवेत्रा विट्ठलरायजिद्धात्रीयगोकुलोत्सवात्मजगोपेश्वरजिता कृते भाष्यप्रकाशस्य तृतीयाध्यायस्य रश्मौ तृतीयाध्यायस्य द्वितीयः पादः ॥ ३ ॥ २ ॥

इति श्रीमत्कृष्णद्वैपायनप्रणीतब्रह्मसूत्रेषु तृतीये उपनिषदां बोधकताप्रकारनिरूपके साधनाध्याये विषयावधृतिर्नाम द्वितीयः पादः।

---